# मन्त्रपुष्पम्

सस्वराः

उपनिषन्मन्त्राः घनपाठमन्त्राः सामवेदमन्त्राः

अथर्वणवेदमन्त्राः श्रीरुद्रप्रश्नः चमकप्रश्नः अरुणप्रश्नः

शिवमन्त्राः सूक्तानि च दिव्यस्तोत्रम्

परिष्कर्ता

**स्वामी देवरूपानन्दः**

रामकृष्ण मठ, खार, मुम्बई

# PREFACE

We are highly gratified to place before the public the pocket size of Mantrapushpam with 600 pages in Devanagari script.

This book of Vedic mantras with swara marks including hymns & prayers to Gods and Goddesses is for daily use. The atmosphere will be surcharged with divine holy vibrations. Peace and Bliss prevail everywhere specially when group chanting is performed.

This handy book contains all major Upanisads, 23 Vedic suktas / hymns with swara marks, Ghanapatha mantras, Samaveda mantras, Rudra Prasnah, Aruna Prasnah and hymns to Gods and Goddesses. Pantajala Yoga Sutra Patha is also included. Yoga Sutra Patha may be recited every day. By reciting mantras everyday, one can dwell in exalted moods untouched by cares and wants.

In Vishnupuranam, it is said that in Satyayuga (The Golden Age), spiritual illumination is attained through meditation and in Dwaparayuga (Brazen Age) through worship. But in Kaliyuga (Iron Age), Mahabharata declares that mantra japa is the best of all spiritual practices.

By chanting the name of Lord, holy thoughts are awakened. For attaining perfect peace and happiness chanting of Vedic mantras is one of the best spiritual sadhana. One must seek divine help and grace by daily prayers to Gods and Goddesses.

One can easily memorise Rudram and Chamakam, Lalita Sahasranama Stotram, Kathopanisad, Mundakopanisad and Gayatri mantras etc. The body and mind will be purified. Sins will be destroyed, paving way for everlasting Peace and Bliss.

For instant use, the pocket size of Mantrapushpam is immensely helpful. It will encourage students and spiritual seekers to perform Vedic chanting in homes, temples and in all sacred religious festivals and cultural functions.

Hope for the manifestation of Divinity the pocket size of Mantrapushpam may be used intensely.

We sincerely feel that the pocket size of Mantrapushpam will be welcomed everywhere in the world.

December, 2003 **RAMAKRISHNA MATH**

Khar, Mumbai

# PREFACE TO THE SECOND EDITION

The first pocket edition of Mantrapushpam published in connection with 150th Birth Anniversary of Srimata Sri Sarada Devi was very well received with great enthusiasm.

We are now publishing the second edition to meet the ever increasing demand for pocket edition.

Mundakopanisad and आप्यायन्तु ममाङ्गानि........ Shanti mantra have no original swara marks. In this edition, they have been rendered with swara marks to facilitate the traditional way of chanting the mantras.

Mantra Sadhana purifies body and mind. One can experience great joy, peace, bliss and establish the divine communion by chanting earnestly Vedic mantras, hymns and prayers to Gods and Goddesses.

Sri Sarada Devi, the divine consort of Sri Ramakrishna said: "Call on the Lord who pervades the entire universe. He will shower His blessings upon you. As wind removes the cloud, so the name of Lord destroys the cloud of worldliness."

In the human birth only, one will get the rare chance to walk on the divine path. By chanting God's name and glories sincerely one should develop love of God and pray for His vision. Sri Ramakrishna said: "God is of the nature of Eternity, Purity and Consciousness. Through His consciousness, one becomes conscious of everything; through His Intelligence, the whole world appears intelligent. If the devotee is sincere, then God who is inner guide of all will certainly reveal Himself. One should

practise discrimination and pray to God for faith and devotion. There is nothing greater than faith. God has form and He is formless as well."

Thou art everything. Thou art the controller of all powers and the source of all powers. Thou art devoid of desires. Thou art the self-luminous, all-blissful, eternal being.
( सर्वशक्तीश्वरस्सर्वः..... *Mantrapushpam Page No. 305)*

Salutations to Brahman. Salutations to the God in the fire. Salutations to the God in the earth. Salutation to the God in the plants. Salutation to the God in speech. Salutation to the Lord of speech. I offer my salutation to the Supreme Being, the all pervading spirit.
( नमो ब्रह्मणे नमो अस्त्वग्नये....... *Mantrapushpam Page No.4)*

May all be freed from dangers. May all realise what is good. May all be actuated by noble thoughts. May all rejoice every where. ( सर्वस्तरतु दुर्गाणि.... *Mantrapushpam Page No. 606)*

In great joy, worship God by chanting Mantrapushpam every day. This is one of the best means for one's own salvation and for the welfare of the whole world. "आत्मनो मोक्षार्थं जगद्धिताय च".

We hope that the pocket edition of Mantrapushpam will become the source of inspiration for all aspirants in spreading the Vedic culture.

Vijayadashami — **RAMAKRISHNA MATH**
Saturday, October 23, 2004 — Khar, Mumbai

## PREFACE TO THE THIRD EDITION

As there is great demand, we are delighted to publish the third edition of Mantrapushpam (pocket size).

In this pocket edition, Kenopanisad, Kalisantaranopanisad and Kshama Prarthana have been rendered with swara marks to facilitate the traditional way of chanting the Mantras. Please note that these above-mentioned Upanisads do not have original intonations.

Also, in this edition सं गच्छध्वं....... (ऋग्वेद संहिता) & हरेर्नाम हरेर्नाम हरेर्नामैव केवलम्...... (बृहत् नारदीय पुराणम्) have been included.

The Shanti Mantra: ॐ आप्यायन्तु ममाङ्गानि...... (केनोपनिषत् : Mantrapushpam Page No.206 and छान्दोग्योपनिषत् : Mantrapushpam Page No.209) is very significant prayer for strength.

May my limbs become strong. Let my speech, vital force, eyes, ears, vitality and all my organs, increase in power. All existence is the Brahman of the Upanisads. May I never deny Brahman nor Brahman deny me. We must cherish a sincere faith in Brahman. Brahman can never refrain from revealing Itself to us. May the virtues proclaimed in

the Upanisads reside in me who am devoted to the Atman.

Swami Vivekananda said :

The soul which is behind each mind and each body is called "Pratyagatman", the individual Atman, and that Soul which is behind the universe as its guide, ruler and governor, is God.

All the forms and ceremonies, prayers and pilgrimages are the preparations. They take off the impurities of the soul; and when the soul becomes pure, it naturally wants to get to the mine of purity, God Himself.

We hope this pocket edition of Mantrapushpam book will be used for the performance of Vedic chanting and for reciting hymns and prayers in homes, temples, monasteries and also during festivals.

The youngsters may be encouraged to learn the chanting of Upanisads and prayers.

Hope the public will welcome this book of Vedic chanting with great enthusiasm.

January 23, 2007 **RAMAKRISHNA MATH**
Sri Saraswati Puja Khar, Mumbai
(Vasanta Panchami)

*The wavy waters in the picture are symbolic of Karma: and lotus, of Bhakti and the rising-sun, of Inana. The encircling serpent is indicative of Yoga and the awakened Kundalini Shakti, while the swan in the picture stands for the Paramatman (Supreme Self). Therefore, the idea of the picture is that, by the union of Karma, Inana, Bhakti and Yoga, the vision of the Paramatman is obtained.*

*Swami Vivekananda*

# अनुक्रमणिका

# मन्त्रपुष्पम्

# मन्त्रपुष्पम्

| | विषयः | पृष्ठम् |
|---|---|---|

# मन्त्रपुष्पम्

विषयः | पृष्ठम्

## दिव्यस्तोत्रम्

# मन्त्रपुष्पम्

## मन्त्रपुष्पम्

## ॥ प्रार्थना ॥

ॐ गणानां त्वा गणपतिगं हवामहे कविं कवीना-मुपमश्रवस्तमम् । ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिस्सीद सादनम् ॥

ॐ हंस हंसाय विद्महे परमहंसाय धीमहि । तन्नो हंसः प्रचोदयात् ॥

ॐ नमो हिरण्यबाहवे हिरण्यवर्णाय हिरण्यरूपाय हिरण्यपतये ऽम्बिकापतय उमापतये पशुपतये नमो नमः ॥

ऋतगं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् । ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमो नमः ॥ ईशान-स्सर्व-विद्याना-मीश्वर-स्सर्व-भूतानां ब्रह्माऽधिपति-र्ब्रह्मणोऽधिपति-र्ब्रह्मा शिवो मे अस्तु सदाशिवोम् ॥

ॐ भू-र्भुव-स्सुवः ॥ ॐ नमः शम्भवे च मयोभवे च नमः शंकराय च मयस्कराय च नमः शिवाय च शिवतराय च ॥

ॐ निधनपतये नमः । निधनपतान्तिकाय नमः । ऊर्ध्वाय नमः । ऊर्ध्वलिङ्गाय नमः । हिरण्याय नमः । हिरण्यलिङ्गाय नमः । सुवर्णाय नमः । सुवर्णलिङ्गाय नमः । दिव्याय नमः । दिव्यलिङ्गाय नमः । भवाय नमः । भवलिङ्गाय नमः । शर्वाय नमः । शर्वलिङ्गाय नमः । शिवाय नमः । शिवलिङ्गाय नमः । ज्वलाय नमः । ज्वललिङ्गाय नमः । आत्माय नमः । आत्मलिङ्गाय नमः । परमाय

नमः । परमलिङ्गाय नमः । एतत्सोमस्यं सूर्यस्य सर्वलिङ्गग्ं स्थापयति पाणिमन्त्रं पवित्रम् ॥

सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः । भवे भंवे नातिंभवे भवस्वमाम् । भवोद्भवाय नमः ॥ वामदेवाय नमों ज्येष्ठाय नमं-श्श्रेष्ठाय नमों रुद्राय नमः कालाय नमः कलंविकरणाय नमो बलंविकरणाय नमो बलाय नमो बलंप्रमथनाय नम-स्सर्वभूतदमनाय नमों मनोन्मंनाय नमः ॥

अघोरेंभ्योऽथ घोरेंभ्यो घोरघोरंतरेभ्यः । सर्वेभ्य-स्सर्वशर्वेभ्यो नमंस्ते अस्तु रुद्ररूपेभ्यः ॥

सर्वो वै रुद्र-स्तस्मैं रुद्राय नमों अस्तु । पुरुंषो वै रुद्र-स्सन्महो नमो नमः । विश्वं भूतं भुवंनं चित्रं बंहुधा जातं जायमानं च यत् । सर्वो ह्येष रुद्र-स्तस्मैं रुद्राय नमों अस्तु ॥

कद्रुद्राय प्रचेंतसे मीढुष्टंमाय तव्यंसे । वो चेम शन्तंमग्ं हृदे । सर्वो-ह्येष रुद्र-स्तस्मैं रुद्राय नमों अस्तु ॥

त्र्यंम्बकं यजामहे सुगन्धिं पुंष्टिवर्धनम् । उर्वारुकमिंव बन्धंनान्मृत्योर्मुक्षीय माऽमृतांत् ॥

ये तें सहस्रंमयुतं पाशा मृत्यो मर्त्याय हन्तंवे । तान् यज्ञस्यं मायया सर्वा-नवंयजामहे ॥ मृत्यवे स्वाहां मृत्यवे स्वाहां । ॐ नमो भगवते रुद्राय विष्णवे मृत्युंर्मे पाहि ॥

ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् ॥

ॐ नमस्ते अस्तु भगवन्विश्वेश्वराय महादेवाय त्र्यम्बकाय त्रिपुरान्तकाय त्रिकाग्निकालाय कालाग्निरुद्राय नीलकण्ठाय मृत्युञ्जयाय सर्वेश्वराय सदाशिवाय श्रीमन्महादेवाय नमः ॥

ॐ शं च मे मयश्च मे प्रियं च मेऽनुकामश्च मे कामश्च मे सौमनसश्च मे भद्रं च मे श्रेयश्च मे वस्यश्च मे यशश्च मे भगश्च मे द्रविणं च मे यन्ता च मे धर्ता च मे क्षेमश्च मे धृतिश्च मे विश्वं च मे महश्च मे संविच्च मे ज्ञात्रं च मे सूश्च मे प्रसूश्च मे सीरं च मे लयश्च म ऋतं च मेऽमृतं च मेऽयक्ष्मं च मेऽनामयच्च मे जीवातुश्च मे दीर्घायुत्वं च मेऽनमित्रं च मेऽभयं च मे सुगं च मे शयनं च मे सूषा च मे सुदिनं च मे ॥ सदाशिवोम् ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

ॐ असतो मा सद्गमय । तमसो मा ज्योतिर्गमय । मृत्योर्माऽमृतं गमय ॥

यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः । तस्य प्रकृति-लीनस्य यः परस्स महेश्वरः ॥ सदाशिवोम् ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

॥ हरिः ॐ तत्सत् ॥ श्रीरामकृष्णार्पणमस्तु ॥

## ॥ शान्तिमन्त्राः ॥

ॐ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्विनावधीतमस्तु मा विद्विषावहै ॥

ॐ शान्तिः शान्तिः शान्तिः ॥ १ ॥

ॐ शं नो मित्रः शं वरुणः । शं नो भवत्वर्यमा । शं न इन्द्रो बृहस्पतिः । शं नो विष्णुरुरुक्रमः । नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि । त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि । ऋतं वदिष्यामि । सत्यं वदिष्यामि । तन्मामवतु । तद्वक्तारमवतु । अवतु माम् । अवतु वक्तारम् ॥ ॐ शान्तिः शान्तिः शान्तिः ॥ २ ॥

ॐ भद्रं कर्णेभिः शृणुयाम देवाः । भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवाग्ंसस्तनूभिः । व्यशेम देवहितं यदायुः । स्वस्ति न इन्द्रो वृद्धश्रवाः । स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः । स्वस्ति नो बृहस्पतिर्दधातु ॥

ॐ शान्तिः शान्तिः शान्तिः ॥ ३ ॥

ॐ नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः । नमो वाचे नमो वाचस्पतये नमो विष्णवे बृहते करोमि ॥

ॐ शान्तिः शान्तिः शान्तिः ॥ ४ ॥

ॐ यश्छन्दसामृषभो विश्वरूपः । छन्दोभ्योऽध्यमृतात्सम्बभूव । स मेन्द्रो मेधया स्पृणोतु । अमृतस्य देवधारणो भूयासम् । शरीरं मे

विचर्षणम् । जिह्वा मे मधुमत्तमा । कर्णाभ्यां भूरिविश्रुवम् । ब्रह्मणः कोशोऽसि मेधया पिहितः । श्रुतं मे गोपाय ॥

ॐ शान्तिः शान्तिः शान्तिः ॥ ५ ॥

ॐ तच्छं योरावृणीमहे । गातुं यज्ञाय । गातुं यज्ञपतये । दैवी स्वस्तिरस्तु नः । स्वस्तिर्मानुषेभ्यः । ऊर्ध्वं जिगातु भेषजम् । शं नो अस्तु द्विपदे । शं चतुष्पदे ॥ ॐ शान्तिः शान्तिः शान्तिः ॥ ६ ॥

ॐ नमो वाचे या चोदिता या चानुदिता तस्यै वाचे नमो नमो वाचे नमो वाचस्पतये नम ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रपतिभ्यो मामामृषयो मन्त्रकृतो मन्त्रपतयः परादुर्मा ऽहमृषीन्मन्त्रकृतो मन्त्रपतीन्परादां वैश्वदेवीं वाचमुद्यासग् शिवामदस्तां जुष्टां देवेभ्यः शर्म मे द्यौः शर्म पृथिवी शर्म विश्वमिदं जगत् । शर्म चन्द्रश्च सूर्यश्च शर्म ब्रह्मप्रजापती । भूतं वदिष्ये भुवनं वदिष्ये तेजो वदिष्ये यशो वदिष्ये तपो वदिष्ये ब्रह्म वदिष्ये सत्यं वदिष्ये तस्मा अहमिदमुपस्तरण-मुपस्तृण उपस्तरणं मे प्रजायै पशूनां भूयादुपस्तरणमहं प्रजायै पशूनां भूयासं प्राणापानौ मृत्योर्मापातं प्राणापानौ मा मा हासिष्टं मधु मनिष्ये मधु जनिष्ये मधु वक्ष्यामि मधु वदिष्यामि मधुमतीं देवेभ्यो वाचमुद्यासग् शुश्रूषेण्यां मनुष्येभ्यस्तं मा देवा अवन्तु शोभायै पितरोऽनुमदन्तु ॥

ॐ शान्तिः शान्तिः शान्तिः ॥ ७ ॥

ॐ मधुवाता ऋतायते मधुक्षरन्ति सिन्धवः । माध्वीर्नस्सन्त्वोषधीः । मधु नक्तमुतोषसि मधुमत्पार्थिवग्ं रजः । मधुद्यौरस्तु नः पिता । मधुमान्नो वनस्पतिर्मधुमाग्ं अस्तु सूर्यः । माध्वीर्गावो भवन्तु नः ॥ ॐ शान्तिः शान्तिः शान्तिः ॥ ८ ॥

ॐ वाङ्मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितमाविरावीर्म एधि वेदस्य म आणीस्थः श्रुतं मे मा प्रहासीरनेनाधीतेनाहोरात्रान् संदधाम्यृतं वदिष्यामि सत्यं वदिष्यामि तन्मामवतु तद्वक्तारमवत्ववतु मामवतु वक्तारमवतु वक्तारम् ॥ ॐ शान्तिः शान्तिः शान्तिः ॥ ९ ॥

ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥ ॐ शान्तिः शान्तिः शान्तिः ॥ १० ॥

ॐ इडा देवहूर्मनुर्यज्ञनीर्बृहस्पतिरुक्थामदानि शग्ंसिषद्विश्वे देवाः सूक्तवाचः पृथिविमातर्मा मा हिग्ंसीर्मधु मनिष्ये मधु जनिष्ये मधु वक्ष्यामि मधु वदिष्यामि मधुमतीं देवेभ्यो वाचमुद्यासग्ंशुश्रूषेण्यां मनुष्येभ्यस्तं मा देवा अवन्तु शोभायै पितरोऽनुमदन्तु ॥

ॐ शान्तिः शान्तिः शान्तिः ॥ ११ ॥

* * *

# ॥ ईशावास्योपनिषत् ॥

ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते । ॐ शान्तिः शान्तिः शान्तिः ॥

ॐ ईशा वास्यमिदग् सर्वं यत्किञ्च जगत्यां जगत् ।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम् ॥ १ ॥

कुर्वन्नेवेह कर्माणि जिजीविषेच्छतग् समाः ।
एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥ २ ॥

असुर्या नाम ते लोका अन्धेन तमसाऽऽवृताः ।
तागंस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ॥ ३ ॥

अनेजदेकं मनसो जवीयो नैनद्देवा आप्नुवन्पूर्वमर्षत् ।
तद्धावतोऽन्यानत्येति तिष्ठत्तस्मिन्नपो मातरिश्वा दधाति ॥ ४ ॥

तदेजति तन्नेजति तद्दूरे तद्वन्तिके ।
तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः ॥ ५ ॥

यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति ।
सर्वभूतेषु चात्मानं ततो न विजुगुप्सते ॥ ६ ॥

यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजानतः ।
तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥ ७ ॥

स पर्यगाच्छुक्रमकायमव्रणमस्नाविरग् शुद्धमपापविद्धम् ।

कविर्मनीषी परिभूः स्वयम्भू-र्याथातथ्यतोऽर्थान्
व्यदधाच्छाश्वतीभ्यः समाभ्यः ॥ ८ ॥
अन्धं तमः प्रविशन्ति येऽविद्यामुपासते ।
ततो भूय इव ते तमो य उ विद्यायाग्ं रताः ॥ ९ ॥
अन्यदेवाहुर्विद्ययाऽन्यदाहुरविद्यया ।
इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥ १० ॥
विद्यां चाविद्यां च यस्तद्वेदोभयग्ं सह ।
अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥ ११ ॥
अन्धं तमः प्रविशन्ति येऽसम्भूतिमुपासते ।
ततो भूय इव ते तमो य उ सम्भूत्याग्ं रताः ॥ १२ ॥
अन्यदेवाहुः सम्भवादन्यदाहुरसम्भवात् ।
इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥ १३ ॥
सम्भूतिं च विनाशं च यस्तद्वेदोभयग्ं सह ।
विनाशेन मृत्युं तीर्त्वा सम्भूत्याऽमृतमश्नुते ॥ १४ ॥
हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ।
तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये ॥ १५ ॥
पूषन्नेकर्षे यम सूर्य प्राजापत्य व्यूह रश्मीन्
समूह तेजो यत्ते रूपं कल्याणतमं तत्ते पश्यामि ।
योऽसावसौ पुरुषः सोऽहमस्मि ॥ १६ ॥

वायुरनिंलममृतमथेदं भस्मांन्तगं शरींरम् ।
ॐ ३ क्रतो स्मरं कृतगं स्मंर क्रतो स्मरं कृतगं स्मंर ॥ १७॥
अग्ने नयं सुपथां राये अस्मान् विश्वांनि देव वयुनांनि विद्वान् ।
युयोध्यस्मज्जुंहुराणमेनो भूयिंष्ठां ते नमंउक्तिं विधेम ॥ १८॥

ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय
पूर्णमेवावशिष्यते । ॐ शान्तिः शान्तिः शान्तिः ॥

## ॥ आत्मस्वरूप कथनम् ॥

किं ज्योतिस्तव भानुमानहनि मे रात्रौ प्रदीपादिकं
स्यादेवं रविदीपदर्शनविधौ किं ज्योतिराख्याहि मे ।
चक्षुस्तस्य निमीलनादिसमये किं धीर्धियोदर्शने
किं तत्राहमतो भवान्परमकं ज्योतिस्तदस्मि प्रभो ॥

-श्री शङ्कराचार्य कृतम्

## ॥ नारायणोपनिषत् ॥

ॐ सह नाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै। तेजस्विनावधीतमस्तु मा विद्विषावहै॥ ॐ शान्तिः शान्तिः शान्तिः॥

ॐ अथ पुरुषो ह वै नारायणोऽकामयत प्रजाः सृजेयेति। नारायणात्प्राणो जायते। मनः सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी। नारायणाद्-ब्रह्मा जायते। नारायणाद्-रुद्रो जायते। नारायणादिन्द्रो जायते। नारायणात्प्रजापतयः प्रजायन्ते। नारायणाद्द्वादशादित्या रुद्रा वसवस्सर्वाणि च छन्दांसि। नारायणादेव समुत्पद्यन्ते। नारायणे प्रवर्तन्ते। नारायणे प्रलीयन्ते॥

ओम्। अथ नित्यो नारायणः। ब्रह्मा नारायणः। शिवश्च नारायणः। शक्रश्च नारायणः। द्यावापृथिव्यौ च नारायणः। कालश्च नारायणः। दिशश्च नारायणः। ऊर्ध्वश्च नारायणः। अधश्च नारायणः। अन्तर्बहिश्च नारायणः। नारायण एवेदग्ं सर्वम्। यद्भूतं यच्च भव्यम्। निष्कलो निरञ्जनो निर्विकल्पो निराख्यातः शुद्धो देव एको नारायणः। न द्वितीयोऽस्ति कश्चित्। य एवं वेद। स विष्णुरेव भवति स विष्णुरेव भवति॥

ओमित्यग्रे व्याहरेत्। नम इति पश्चात्। नारायणायेत्युपरिष्टात्। ओमित्येकाक्षरम्। नम इति द्वे अक्षरे। नारायणायेति पञ्चाक्षराणि।

एतद्वै नारायणस्याष्टाक्षरं पदम् । यो ह वै नारायणस्याष्टाक्षरं पदमध्येति । अनपब्रुवस्सर्वमायुरेति । विन्दते प्राजापत्यग् रायस्पोषं गौपत्यम् । ततोऽमृतत्वमश्नुते ततोऽमृतत्वमश्नुत इति । य एवं वेद ॥

प्रत्यगानन्दं ब्रह्म पुरुषं प्रणवस्वरूपम् । अकार उकार मकार इति । तानेकधा समभरत्तदेतदोमिति । यमुक्त्वा मुच्यते योगी जन्मसंसारबन्धनात् । ॐ नमो नारायणायेति मन्त्रोपासकः । वैकुण्ठभुवनलोकं गमिष्यति । तदिदं परं पुण्डरीकं विज्ञानघनम् । तस्मात्तदिदावन्मात्रम् । ब्रह्मण्यो देवकीपुत्रो ब्रह्मण्यो मधुसूदनोम् । सर्वभूतस्थमेकं नारायणम् । कारणरूपमकार परब्रह्मोम् । एतदथर्व शिरोयोऽधीते प्रातरधीयानो रात्रिकृतं पापं नाशयति । सायमधीयानो दिवसकृतं पापं नाशयति । माध्यन्दिनमादित्या-भिमुखोऽधीयानः पञ्चपातकोपपातकात्प्रमुच्यते । सर्व वेद पारायण पुण्यं लभते । नारायणसायुज्यमवाप्नोति नारायण सायुज्यमवाप्नोति । य एवं वेद । इत्युपनिषत् ॥ ॐ शान्तिः शान्तिः शान्तिः ॥

शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं
विश्वाधारं गगनसदृशं मेघवर्णं शुभाङ्गम् ।
लक्ष्मीकान्तं कमलनयनं योगिभिर्ध्यानगम्यं
वन्दे विष्णुं भवभयहरं सर्वलोकैकनाथम् ॥

# ॥ ऐतरेयोपनिषत् ॥

ऋग्वेदः ऐतरेयद्वितीयारण्यकम्

## प्रथमोऽध्यायः

### प्रथमः खण्डः

ॐ वाङ्मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठित-माविरावीर्म एधि वेदस्य म आणीस्थः श्रुतं मे मा प्रहासीरनेनाधीतेनाहोरात्रान् संदधाम्यृतं वदिष्यामि सत्यं वदिष्यामि तन्मामवतु तद्वक्तारमवत्ववतु मामवतु वक्तारमवतु वक्तारम् ॥ ॐ शान्तिः शान्तिः शान्तिः ॥

ॐ ॥ आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किञ्चन मिषत् । स ईक्षत लोकान्नु सृजा इति ॥ १ ॥ स इमांल्लोकानसृजताम्भो मरीचीर्मरमापोऽदोऽम्भः परेण दिवं द्यौः प्रतिष्ठाऽन्तरिक्षं मरीचयः । पृथिवी मरो या अधस्तात्ता आपः ॥ २ ॥ स ईक्षतेमे नु लोका लोकपालान्नु सृजा इति । सोऽद्भ्य एव पुरुषं समुद्धृत्यामूर्च्छयत् ॥ ३ ॥ तमभ्यतपत्तस्याभितप्तस्य मुखं निरभिद्यत यथाऽण्डम् मुखाद्वाग्वाचोऽग्निर्नासिके निरभिद्येतां नासिकाभ्यां प्राणः प्राणाद्वायुरक्षिणी निरभिद्येतामक्षीभ्यां चक्षुश्चक्षुष आदित्यः कर्णौ निरभिद्येतां कर्णाभ्यां श्रोत्रं श्रोत्राद्दिशस्त्वङ्-निरभिद्यत त्वचो लोमानि लोमभ्य ओषधिवनस्पतयो हृदयं निरभिद्यत हृदयान्मनो मनसश्चन्द्रमा नाभिर्निरभिद्यत नाभ्या अपानोऽपानान्मृत्युः शिश्नं निरभिद्यत शिश्नाद्रेतो रेतस आपः ॥ ४ ॥

## द्वितीयः खण्डः

ता एता देवताः सृष्टा अस्मिन्महत्यर्णवे प्रापतन्तमशनाया-पिपासाभ्यामन्ववार्जत्ता एनमब्रुवन्नायतनं नः प्रजानीहि यस्मिन् प्रतिष्ठिता अन्नमदामेति ॥ १ ॥ ताभ्यो गामानयत्ता अब्रुवन्न वै नोऽयमलमिति । ताभ्योऽश्वमानयत्ता अब्रुवन्न वै नोऽयमल-मिति ॥ २ ॥ ताभ्यः पुरुषमानयत्ता अब्रुवन् सुकृतं बतेति पुरुषो वाव सुकृतं । ता अब्रवीद्यथायतनं प्रविशतेति ॥ ३ ॥ अग्निर्वाग्भूत्वा मुखं प्राविशद्वायुः प्राणो भूत्वा नासिके प्राविशदादित्यश्चक्षुर्भूत्वा ऽक्षिणी प्राविशद्दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्नोषधिवनस्पतयो लोमानि भूत्वा त्वचं प्राविशंश्चन्द्रमा मनो भूत्वा हृदयं प्राविशन्मृत्युरपानो भूत्वा नाभिं प्राविशदापो रेतो भूत्वा शिश्नं प्राविशन् ॥ ४ ॥ तमशनायापिपासे अब्रूतामावाभ्यामभिप्रजानीहीति । ते अब्रवीदेतास्वेव वां देवतास्वाभजाम्येतासु भागिन्यौ करोमीति । तस्माद्यस्यै कस्यै च देवतायै हविर्गृह्यते भागिन्यावेवास्याम-शनाया पिपासे भवतः ॥ ५ ॥

## तृतीयः खण्डः

स ईक्षतेमे नु लोकाश्च लोकपालाश्चान्नमेभ्यः सृजा इति ॥ १ ॥ सोऽपोऽभ्य-तपत्ताभ्योऽभितप्ताभ्यो मूर्ति-रजायत । या वै सा मूर्तिरजायतान्नं वै तत् ॥ २ ॥ तदेनत्सृष्टं पराङ्त्यजिघांसत्तद्वाचा ऽजिघृक्षत्तन्नाशक्नोद्वाचा ग्रहीतुं स यद्धैनद्वाचाऽग्रहैष्यदभिव्याहृत्य

हैवान्नमत्रप्स्यत् ॥ ३ ॥ तत्प्राणेनाजिघृक्षत्तन्नाशक्नोत्प्राणेन ग्रंहीतुं स यद्धैनत्प्राणेनाग्रंहैष्यदभिप्राण्य हैवान्नंमत्रप्स्यत् ॥ ४ ॥ तच्चक्षुषाऽजिघृक्षत्तन्नाशक्नोच्चक्षुषा ग्रंहीतुं स यद्धैनच्चक्षुषाऽग्रंहैष्यद्दृष्ट्वा हैवान्नंमत्रप्स्यत् ॥ ५ ॥ तच्छ्रोत्रेणाजिघृक्षत्तन्नाशक्नोच्छ्रोत्रेण ग्रंहीतुं स यद्धैनच्छ्रोत्रेणाग्रहैष्यच्छ्रुत्वा हैवान्नंमत्रप्स्यत् ॥ ६ ॥ तत्त्वचाऽजिघृक्षत्तन्नाशक्नोत्त्वचा ग्रंहीतुं स यद्धैनत्त्वचाऽग्रहैष्यत् स्पृष्ट्वा हैवान्नंमत्रप्स्यत् ॥ ७ ॥ तन्मनसाऽजिघृऽक्षत्तन्नाशक्नोन्मनसा ग्रंहीतुं स यद्धैनन्मनसाऽग्रहैष्यद्ध्यात्वा हैवान्नंमत्रप्स्यत् ॥ ८ ॥ तच्छिश्नेनाजिघृक्षत्तन्नाशक्नोच्छिश्नेन ग्रंहीतुं स यद्धैनच्छिश्नेनाग्रहैष्यद्विसृज्य हैवान्नंमत्रप्स्यत् ॥ ९ ॥ तदपानेनाजिघृक्षत्तदावयत्सैषोऽन्नस्य ग्रहो यद्वायुरन्नायुर्वा एष यद्वायुः ॥ १० ॥ स ईक्षत कथं न्विदं मदृते स्यादिति स ईक्षत कतरेण प्रपद्या इति । स ईक्षत यदि वाचाऽभिव्याहृतं यदि प्राणेनाभिप्राणितं यदि चक्षुषा दृष्टं यदि श्रोत्रेण श्रुतं यदि त्वचा स्पृष्टं यदि मनसा ध्यातं यद्यपानेनाभ्यपानितं यदि शिश्नेन विसृष्टमथ कोँऽहमिति ॥ ११ ॥ स एतमेव सीमानं विदार्यैतया द्वारा प्राँपद्यत। सैषा विदृतिर्नाम द्वास्तदेतन्नान्दनन्तस्य त्रय आवसथास्त्रयंः स्वप्ना अयमावसथोऽयमावसथोऽयमावसंथ इति ॥ १२ ॥ स जातो भूतान्यभिव्यैरव्यत् किमिहान्यं वावदिषदिति । स एतमेव पुरुषं ब्रह्म ततममपश्यदिदम-

दर्शमिती ३ ॥ १३ ॥ तस्मादिदन्द्रो नामेदन्द्रो ह वै नाम तमिदंन्द्रं सन्तमिन्द्र इंत्याचक्षते परोक्षेण परोक्षप्रिंया इव हि देवाः परोक्षप्रिया इवं हि देवाः ॥ १४ ॥

## द्वितीयोऽध्यायः

### प्रथमः खण्डः

ॐ पुरुषे ह वा अयमादितो गंर्भो भवति यदेतद्रेत स्तदेतत्सर्वेभ्योऽङ्गेभ्यस्तेजः संभूतमात्मन्येवाऽऽत्मानं बिभर्ति तद्यदा स्त्रियां सिञ्चत्यथैनज्जनयति तदस्य प्रथमं जन्म ॥ १ ॥ तत् स्त्रिया आत्मभूयं गच्छति यथा स्वमङ्गं तथा तस्मादेनां न हिनस्ति साऽस्यैतमात्मानमत्र गतं भावयति ॥ २ ॥ सा भावयित्री भावयितव्याँ भवति तं स्त्री गर्भंबिभर्ति सोऽग्र एव कुमारं जन्मनोऽग्रेऽधिभावयति स यत्कुमारं जन्मनोऽग्रेऽधिभावय-त्यात्मानमेव तद्भावयत्येषां लोकानां सन्तत्या एवं सन्तता हीमे लोकास्तदस्य द्वितीँयं जन्म ॥ ३ ॥ सोऽस्यायमात्मा पुण्येभ्यः कर्मभ्यः प्रतिंधीयतेऽथास्यायमितर आत्मा कृतकृत्यो वयोगतः प्रैति स इतः प्रयन्नेव पुनंर्जायते तदस्य तृतीँयं जन्म ॥ ४ ॥ तदुंक्तमृषिणा-गर्भे नु सन्नन्वेंषामवेदमहं देवानां जनिंमानि विश्वाँ। शतं मा पुर आयंसीररक्षन्नधंः श्येनो जवसा निरंदीयमिति गर्भ एवैतच्छयानो वामदेव एवंमुवाच ॥ ५ ॥ स एवं विद्वानस्मा-च्छरीरभेदादूर्ध्व उत्क्रम्या-मुष्मिन् स्वर्गे लोके सर्वान् कामानाप्त्वा ऽमृतः समभवंत्समभवत् ॥ ६ ॥

## तृतीयोऽध्यायः

### प्रथमः खण्डः

ॐ कोऽयमात्मेति वयमुपास्महे कतरः स आत्मा येन वाँ पश्यति येन वाँ शृणोति येन वाँ गन्धानाजिघ्रति येन वाँ वाचं व्याकरोति येन वाँ स्वादुचास्वादु च विंजानाति ॥ १ ॥ यदेतद्धृदयं मनश्चैतत् संज्ञानमाज्ञानं विज्ञानं प्रज्ञानं मेधा दृष्टिर्धृतिर्मतिर्मनीषा जूतिः स्मृतिः संकल्पः क्रतुरसुः कामो वंश इति सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानिं भवन्ति ॥ २ ॥ एष ब्रह्मैष इन्द्र एष प्रजापतिरेते सर्वे देवा इमानि च पञ्च महाभूतानि पृथिवी वायुराकाश आपो ज्योतींषीत्येतानीमानि च क्षुद्रमिश्राणीव बीजानीतराणि चेतराणि चाण्डजानि च जारुजानि च स्वेदजानि चोद्भिज्जानि चाश्वा गावः पुरुषा हस्तिनो यत्किञ्चेदं प्राणि जङ्गमं च पतत्रि च यच्च स्थावरं सर्वं तत्प्रज्ञानेत्रम् प्रज्ञानें प्रतिष्ठितं प्रज्ञानेंत्रो लोकः प्रज्ञा प्रतिष्ठा प्रज्ञाँनं ब्रह्म ॥ ३ ॥ स एतेन प्रज्ञेनाऽऽत्मनाऽस्माल्लोका-दुत्क्रम्यामुष्मिन् स्वर्गे लोके सर्वान् कामानाप्त्वाऽमृतः समभवंत् समभवदित्योम् ॥ ४ ॥

ॐ वाङ्मे मनंसि प्रतिंष्ठिता मनों मे वाचि प्रतिंष्ठित-माविरावीर्म एधि वेदस्य म आणीँस्थः श्रुतं मे मा प्रहांसीरनेनाधीतेंनाहोरात्रान् संदंधाम्यृतं वंदिष्यामि सत्यं वंदिष्यामि तन्मामंवतु तद्वक्तारंमवत्ववंतु मामवंतु वक्तारमवंतु वक्तारमँ ॥ ॐ शान्तिः शान्तिः शान्तिंः ॥

## ॥ तैत्तिरीयोपनिषत् ॥

### प्रथमा शीक्षावल्ली

ॐ शं नों मित्र-श्शं वरुंणः । शं नों भवत्वर्यमा । शं न इन्द्रो बृहस्पतिंः । शं नो विष्णुं-रुरुक्रमः । नमो ब्रह्मंणे । नमंस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मांसि । त्वामेव प्रत्यक्षं ब्रह्मं वदिष्यामि । ऋतं वंदिष्यामि । सत्यं वंदिष्यामि । तन्मामंवतु । तद्वक्तारंमवतु । अवंतु माम् । अवंतु वक्तारम्ँ । ॐ शान्तिः शान्तिः शान्तिंः ॥ १ ॥

### शिक्षाशास्त्रार्थसङ्ग्रहः

शीक्षां व्याँख्यास्यामः । वर्ण-स्स्वरः । मात्रा बलम् । सामं सन्तानः । इत्युक्त-श्शीँक्षाध्यायः ॥ २ ॥

### संहितोपासनम्

सह नौ यशः । सह नौ ब्रंह्मवर्चसम् । अथातस्सगंहिताया उपनिषदं व्याँख्यास्यामः । पञ्चस्वधिकंरणेषु । अधिलोकमधि-ज्यौतिष-मधिविद्य-मधिप्रजं-मध्यात्मम् । ता महासगंहिता इंत्याचक्षते । अथांधिलोकम् । पृथिवी पूँर्वरूपम् । द्यौ रुत्तंररूपम् । आकांश-स्सन्धिः ॥ ३ ॥

वायुं-स्सन्धानम् । इत्यंधिलोकम् । अथांधिज्यौतिषम् । अग्निः पूँर्वरूपम् । आदित्य उत्तंररूपम् । आंपस्सन्धिः । वैद्युतंस्सन्धानम् । इत्यंधिज्यौतिषम् । अथांधिविद्यम् । आचार्यः पूँर्वरूपम् ॥ ४ ॥

अन्तेवास्युत्तंररूपम् । विंद्या सन्धिः । प्रवचनगं सन्धानम् ।

इत्यंधिविद्यम् । अथाधिप्रजम् । माता पूर्वरूपम् । पितोत्तंररूपम् । प्रंजासन्धिः । प्रजननगं सन्धानम् । इत्यधिप्रजम् ॥ ५ ॥

अथाध्यात्मम् । अधराहनुः पूर्वरूपम् । उत्तराहनुरुत्तंररूपम् । वाक्सन्धिः । जिह्वांसन्धानम् । इत्यध्यात्मम् । इतीमामंहासगंहिताः । य एवमेता महासगंहिता व्याख्यांता वेद । सन्धीयते प्रजंया पशुभिः । ब्रह्मवर्चसेनान्नाद्येन सुवर्ग्येण लोकेन ॥ ६ ॥

**मेधादि-सिद्धचर्था आवहन्तीहोम-मन्त्राः**

यश्छन्दंसा-मृषभो विश्वरूपः । छन्दोभ्योऽध्यमृतांथ्संबभूवं । स मेन्द्रों मेधयां स्पृणोतु । अमृतंस्य देवधारंणो भूयासम् । शरीरं मे विचंर्षणम् । जिह्वा मे मधुंमत्तमा । कर्णाभ्यां भूरिविश्रुंवम् । ब्रह्मंणः कोशोंसि मेधया पिंहितः । श्रुतं में गोपाय । आवहंन्ती वितन्वाना ॥ ७ ॥

कुर्वाणा चीरं-मात्मनंः । वासागंसि मम गावंश्च । अन्नपाने चं सर्वदा । ततों मे श्रिय-मावंह । लोमशां पशुभिंस्सह स्वाहां । आमांयन्तु ब्रह्मचारिणस्स्वाहां । विमांऽऽयन्तु ब्रह्मचारिणस्स्वाहां । प्रमांऽऽयन्तु ब्रह्मचारिणस्स्वाहां । दमांयन्तु ब्रह्मचारिणस्स्वाहां । शमांयन्तु ब्रह्मचारिणस्स्वाहां ॥ ८ ॥

यशो जनेंऽसानि स्वाहां । श्रेयान् वस्यंसोऽसानि स्वाहां । तं त्वां भग प्रविंशानि स्वाहां । स मां भग प्रविंश स्वाहां । तस्मिन् सहस्रंशाखे । निभंगाऽहं त्वयिं मृजे स्वाहां । यथाऽऽपः

प्रवंताऽऽयन्तिं । यथा मासा अहर्जरम् । एवं मां ब्रह्मचारिणः । धात-रायंन्तु सर्वत-स्स्वाहाँ । प्रतिवेशोंऽऽसि प्रमांभाहि प्रमांपद्यस्व ॥ ९ ॥

### व्याहृत्युपासनम्

भू-र्भुव-स्सुव-रिति वा एता-स्तिस्रो व्याहृतयः । तासांमुहस्मै तां चतुर्थीम् । माहांचमस्यः प्रवेंदयते । मह इतिं । तद्ब्रह्मं । स आत्मा । अङ्गांन्यन्या देवताः । भूरिति वा अयं लोकः । भुव इत्यन्तरिक्षम् । सुव-रित्यसौ लोकः ॥ १० ॥

मह इत्यादित्यः । आदित्येन वाव सर्वे-लोका महीयन्ते । भूरिति वा अग्निः । भुव इतिं वायुः । सुव-रित्यादित्यः । मह इतिं चन्द्रमाः । चन्द्रमंसा वाव सर्वाणि ज्योतीग्ंषि महीयन्ते । भू-रिति वा ऋचः । भुव इति सामानि । सुव-रिति यजूग्ंषि ॥ ११ ॥

मह इति ब्रह्मं । ब्रह्मंणा वाव सर्वेवेदा महीयन्ते । भूरिति वै प्राणः । भुव इत्यपानः । सुव-रितिं व्यानः । मह इत्यन्नम् । अन्नेन वाव सर्वे प्राणा महीयन्ते । ता वा एताश्चतंस्रश्चतुर्धा । चतंस्रश्चतस्रो व्याहृतयः । ता यो वेद । स वेद ब्रह्मं । सर्वेऽस्मैदेवा बलिमावंहन्ति ॥ १२ ॥

### मनोमयत्वादि-गुणक-ब्रह्मोपासनया स्वाराज्य-सिद्धिः

स य एषोऽन्त-र्हृदय आकाशः । तस्मिंन्नयं पुरुषो मनोमयः । अमृतो हिरण्मयः । अन्तंरेण तालुके । य एषस्तनं इवावलम्बंते । सेन्द्रयोनिः । यत्रासौ केंशान्तो विवर्तते । व्यपोह्य शीर्षकपाले ।

भूरित्यग्नौ प्रतिंतिष्ठति । भुव इतिं वायौ ॥ १३ ॥

सुवरित्यांदित्ये । मह इति ब्रह्मंणि । आप्नोति स्वारांज्यम् । आप्नोति मनंसस्पतिम् । वाक्पंतिश्चक्षुंष्पतिः । श्रोत्रंपति-र्विज्ञानंपतिः । एतत्ततों भवति । आकाशशंरीरं ब्रह्मं । सत्यात्मं प्राणारांमं मनं आनन्दम् । शान्तिंसमृद्ध-ममृतम् । इतिं प्राचीन योग्योपांस्व ॥ १४ ॥

## पृथिव्याद्युपाधिक-पञ्च-ब्रह्मोपासनम्

पृथिव्यंन्तरिंक्षं द्यौ-र्दिशोंऽवान्तरदिशाः । अग्निर्वायुरांदित्य-श्चन्द्रमा नक्षंत्राणि । आप ओषंधयो वनस्पतंय आकाश आत्मा । इत्यंधिभूतम् । अथाध्यात्मम् । प्राणो व्यानोंऽपान उंदानस्संमानः । चक्षुश्श्रोत्रं मनो वाक् त्वक् । चर्ममांग्ंसग् स्नावाऽस्थिं मज्जा । एत-दंधिविधाय ऋषि-रवोंचत् । पाङ्क्तं वा इदग्ं सर्वम् । पाङ्क्तेंनैव पाङ्क्तग्ं स्पृणोतीतिं ॥ १५ ॥

## प्रणवोपासनम्

ओ-मिति ब्रह्मं । ओमितीदग्ं सर्वम् । ओमित्येत-दंनुकृति हस्म वा अप्योश्रांवयेत्याश्रांवयन्ति । ओ-मिति सामांनि गायन्ति । ओग्ं शो-मितिं शस्त्राणिं शग्ंसन्ति । ओमित्यंध्वर्युः प्रंतिगरं प्रतिंगृणाति । ओ-मिति ब्रह्मा प्रसौंति । ओ-मित्यंग्निहोत्र-मनुंजानाति । ओमितिं ब्राह्मणः प्रंवक्ष्यन्नांह ब्रह्मोपांप्नवानीतिं । ब्रह्मैवोपांप्नोति ॥ १६ ॥

### स्वाध्याय-प्रशंसा

ऋतं च स्वाध्यायप्रवंचने च । सत्यं च स्वाध्यायप्रवंचने च । तपश्च स्वाध्यायप्रवंचने च । दमश्च स्वाध्यायप्रवंचने च । शमश्च स्वाध्यायप्रवंचने च । अग्नयश्च स्वाध्यायप्रवंचने च । अग्निहोत्रं च स्वाध्यायप्रवंचने च । अतिथयश्च स्वाध्यायप्रवंचने च । मानुषं च स्वाध्यायप्रवंचने च । प्रजा च स्वाध्यायप्रवंचने च । प्रजनश्च स्वाध्यायप्रवंचने च । प्रजातिश्च स्वाध्यायप्रवंचने च । सत्यमिति सत्यवचा राथी तरः । तप इति तपोनित्यः पौंरुशिष्टिः । स्वाध्याय प्रवचने एवेति नाको मौद्गल्यः । तद्धि तपं-स्तद्धि तपः ॥ १७ ॥

### ब्रह्मज्ञान-प्रकाशक-मन्त्रः

अहं वृक्षस्य रेरिंवा । कीर्तिः पृष्ठं गिरे-रिंव । ऊर्ध्वपंवित्रो वाजिनींव स्वमृतं-मस्मि । द्रविंणगं सवंर्चसम् । सुमेधा अंमृतोक्षितः । इति त्रिशङ्कोर्वेदांनुवचनम् ॥ १८ ॥

### शिष्यानुशासनम्

वेदमनूच्याचार्योऽन्तेवासिन-मंनुशास्ति । सत्यं वद । धर्मं चर । स्वाध्यायांन्मा प्रमदः । आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यंवच्छेत्सीः । सत्यान्न प्रमंदितव्यम् । धर्मान्न प्रमंदितव्यम् । कुशलान्न प्रमंदितव्यम् । भूत्यै न प्रमंदितव्यम् । स्वाध्यायप्रवचनाभ्यां न प्रमंदितव्यम् ॥ १९ ॥

देवपितृकार्याभ्यां न प्रमंदितव्यम् । मातृंदेवो भव । पितृंदेवो

भव । आचार्यदेवो भव । अतिथिदेवो भव । यान्यनवद्यानि कर्माणि । तानि सेवितव्यानि । नो इतराणि । यान्यस्माकग् सुचरितानि । तानि त्वयोपास्यानि ॥ २० ॥

नो इतराणि । ये के चास्मच्छ्रेयाग्ंसो ब्राह्मणाः । तेषां त्वयाऽऽसने न प्रश्वसितव्यम् । श्रद्धया देयम् । अश्रद्धयाऽदेयम् । श्रिया देयम् । ह्रिया देयम् । भिया देयम् । संविदा देयम् । अथ यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात् ॥ २१ ॥

ये तत्र ब्राह्मणाँ-स्सम्मर्शिनः । युक्ता आयुक्ताः । अलूक्षा धर्म-कामास्स्युः । यथा ते तत्र वर्तेरन् । तथा तत्र वर्तेथाः । अथाभ्याख्यातेषु । ये तत्र ब्राह्मणाँ-स्सम्मर्शिनः । युक्ता आयुक्ताः । अलूक्षा धर्म-कामास्स्युः । यथा ते तेषु वर्तेरन् । तथा तेषु वर्तेथाः । एष आदेशः । एष उपदेशः । एषा वेदोपनिषत् । एतदनुशासनम् । एवमुपासितव्यम् । एवमुचैतदुपास्यम् ॥ २२ ॥

## उत्तरशान्तिपाठः

शं नो मित्र-श्शं वरुणः । शं नो भवत्वर्यमा । शं न इन्द्रो बृहस्पतिः । शं नो विष्णु-रुरुक्रमः । नमो ब्रह्मणे । नमस्ते वायो । त्व-मेव प्रत्यक्षं ब्रह्मासि । त्वामेव प्रत्यक्षं ब्रह्मावादिषम् । ऋतमवादिषम् । सत्यमवादिषम् । तन्मामावीत् । तद्वक्तारमावीत् । आवीन्माम् । आवीद्वक्तारम् । ॐ शान्तिः शान्तिः शान्तिः ॥

## द्वितीया ब्रह्मानन्दवल्ली

ॐ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्विनावधीतमस्तु मा विद्विषावहै ।

ॐ शान्तिः शान्तिः शान्तिः ॥

### उपनिषत्सारसंग्रहः

ॐ ब्रह्मविदाप्नोति परम् । तदेषाऽभ्युक्ता । सत्यं ज्ञानमनन्तं ब्रह्म । यो वेद निहितं गुहायां परमे व्योमन् । सोऽश्नुते सर्वान् कामान्सह । ब्रह्मणा विपश्चितेति । तस्माद्वा एतस्मादात्मन आकाशस्संभूतः । आकाशाद्वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी । पृथिव्या ओषधयः । ओषधीभ्योऽन्नम् । अन्नात्पुरुषः । स वा एष पुरुषोऽन्नरसमयः । तस्येदमेव शिरः । अयं दक्षिणः पक्षः । अयमुत्तरः पक्षः । अयमात्मा । इदं पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ॥ १ ॥

### पञ्चकोशविवरणम्

अन्नाद्वै प्रजाः प्रजायन्ते । याः काश्च पृथिवीग्ंश्रिताः । अथो अन्नेनैव जीवन्ति । अथैनदपियन्त्यन्ततः । अन्नग्ं हि भूतानां ज्येष्ठम् । तस्मात्सर्वौषधमुच्यते । सर्वं वै तेऽन्नमाप्नुवन्ति । येऽन्नं ब्रह्मोपासते । अन्नग्ं हि भूतानां ज्येष्ठम् । तस्मात् सर्वौषधमुच्यते । अन्नाद्भूतानि जायन्ते । जातान्यन्नेन वर्धन्ते । अद्यतेऽत्ति च भूतानि । तस्मादन्नं तदुच्यत इति । तस्माद्वा एतस्मादन्नरसमयात् ।

अन्योऽन्तर आत्माँ प्राणमयः । तेनैष पूर्णः । स वा एष पुरुषविंध एव । तस्य पुरुंषविधताम् । अन्वयं पुरुषविधः । तस्य प्राणं एव शिरः । व्यानो दक्षिणः पक्षः । अपान उत्तरः पक्षः । आकांश आत्मा । पृथिवी पुच्छं प्रतिष्ठा । तदप्येष श्लोंको भवति ॥ २ ॥

प्राणं देवा अनुप्राणंन्ति । मनुष्याः पशवंश्च ये । प्राणो हि भूताना-मायुः । तस्माँ-त्सर्वायुषमुंच्यते । सर्व-मेव त आयु-र्यन्ति । ये प्राणं ब्रह्मोपासंते । प्राणो हि भूतांना-मायुः । तस्मात्सर्वायुषमुच्यंत इति । तस्यैष एव शारीर आत्मा । यंः पूर्वस्य । तस्माद्वा एतस्मांत् प्राणमयात् । अन्योऽन्तर आत्मां मनोमयः । तेनैष पूर्णः । स वा एष पुरुषविंध एव । तस्य पुरुंषविधताम् । अन्वयं पुरुषविधः । तस्य यजुंरेव शिरः । ऋग्दक्षिंणः पक्षः । सामोत्तंरः पक्षः । आदेंश आत्मा । अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा । तदप्येष श्लोंको भवति ॥ ३ ॥

यतो वाचो निवंर्तन्ते । अप्राँप्य मनंसा सह । आनन्दं ब्रह्मंणो विद्वान् । न बिभेति कदांचनेति । तस्यैष एव शारीर आत्मा । यंः पूर्वस्य । तस्माद्वा एतस्माँन्मनोमयात् । अन्योऽन्तर आत्मा विंज्ञानमयः । तेनैष पूर्णः । स वा एष पुरुषविंध एव । तस्य पुरुंषविधताम् । अन्वयं पुरुषविधः । तस्य श्रद्धैव शिरः । ऋतं दक्षिंणः पक्षः । सत्यमुत्तंरः पक्षः । योंग आत्मा । महः पुच्छं प्रतिष्ठा । तदप्येष श्लोंको भवति ॥ ४ ॥

विज्ञानं यज्ञं तंनुते । कर्माणि तनुतेऽपिं च । विज्ञानं देवास्सर्वे । ब्रह्म ज्येष्ठमुपांसते । विज्ञानं ब्रह्म चेद्वेदं । तस्माच्चेन्न प्रमाद्यंति । शरीरें पाप्मंनो हित्वा । सर्वान् कामान् समश्नुंत इति । तस्यैष एव शारीर आत्मा । यंः पूर्वस्य । तस्माद्वा एतस्माद्विंज्ञान-मयात् । अन्योऽन्तर आत्माऽऽनन्दमयः । तेनैंष पूर्णः । स वा एष पुरुषविंध एव । तस्य पुरुंषविधताम् । अन्वयं पुरुषविधः । तस्य प्रियं-मेव शिरः । मोदो दक्षिंणः पक्षः । प्रमोद उत्तंरः पक्षः । आनंन्द आत्मा । ब्रह्म पुच्छं प्रतिष्ठा । तदप्येष श्लोंको भवति ॥ ५ ॥

असंन्नेव सं भवति । असद्-ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेतिं चेद्वेद । सन्त-मेनं ततो विंदु-रिति । तस्यैष एव शारीर आत्मा । यंः पूर्वस्य । अथातोंऽनुप्रश्नाः । उताविद्वा-नमुं लोकं प्रेत्यं । कश्चन गंच्छती ३ । आहों विद्वा-नमुं लोकं प्रेत्यं । कश्चित्समंश्नुता ३ उ । सोंऽकामयत । बहुस्यां प्रजांयेयेतिं । स तपोंऽतप्यत । स तपं-स्तप्त्वा । इदगं्-सर्व-मसृजत । यदिदं किञ्चं । तत्सृष्ट्वा । तदेवानुप्राविंशत् । तदंनुप्रविश्यं । सच्च त्यच्चांभवत् । निरुक्तं चानिंरुक्तं च । निलयंनं चानिंलयनं च । विज्ञानं चाविंज्ञानं च । सत्यं चानृतं च संत्य-मभवत् । यदिंदं किंच । तत्सत्य-मिंत्याचक्षते । तदप्येष श्लोंको भवति ॥ ६ ॥

**अभयप्रतिष्ठा**

असद्वा इद-मग्रं आसीत् । ततो वै सदंजायत । तदात्मानग्ं

स्वयं-मकुरुत। तस्मा-त्तत्सुकृतमुच्यंत इति। यद्वैं तत्सुकृतम्। रंसो वै सः। रसग् ह्येवायं लब्ध्वाऽऽनंन्दी भवति। को ह्येवान्यांत् कः प्राण्यात्। यदेष आकाश आनंन्दो न स्यात्। एष ह्येवानंन्दयाति। यदा ह्येंवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्ते ऽनिलयनेऽभयं प्रतिंष्ठां विन्दते। अथ सोऽभयं गंतो भवति। यदा ह्येंवैष एतस्मिन्नुदर-मन्तंरं कुरुते। अथ तस्य भंयं भवति। तत्त्वेव भयं विदुषोऽमंन्वानस्य। तदप्येष श्लोंको भवति ॥ ७ ॥

## ब्रह्मानन्दमीमांसा

भीषाऽस्मा-द्वातंः पवते। भीषोदेंति सूर्यंः। भीषाऽस्मादग्निं-श्चेन्द्रश्च। मृत्युर्धावति पञ्चंम इति। सैषाऽऽनन्दस्य मीमांग्ंसा भवति। युवा स्यात्साधुयुंवाऽध्यायकः। आशिष्ठो दृढिष्ठों बलिष्ठः। तस्येयं पृथिवी सर्वा वित्तस्यं पूर्णा स्यात्। स एको मानुषं आनन्दः। ते ये शतं मानुषा आनन्दाः। स एको मनुष्यगन्धर्वाणां-मानन्दः। श्रोत्रियस्य चाकामंहतस्य। ते ये शतं मनुष्यगन्धर्वाणां-मानन्दाः। स एको देवगन्धर्वाणां-मानन्दः। श्रोत्रियस्य चाकामंहतस्य। ते ये शतं देवगन्धर्वाणां-मानन्दाः। स एकः पितृणां चिरलोक-लोकानांमानन्दः। श्रोत्रियस्य चाकामंहतस्य। ते ये शतं पितृणां चिरलोक लोकानां-मानन्दाः। स एक आजानजानां देवानां-मानन्दः। श्रोत्रियस्य चाकामंहतस्य। ते ये शतमाजानजानां देवानां-मानन्दाः। स एकः कर्मदेवानां देवानां-

मानन्दः । ये कर्मणा देवानंपियन्ति । श्रोत्रियस्य चाकामंहतस्य । ते ये शतं कर्मदेवानां देवानांमानन्दाः । स एको देवानां मानन्दः । श्रोत्रियस्य चाकामंहतस्य । ते ये शतंदेवानां-मानन्दाः । स एक इन्द्रंस्यानन्दः । श्रोत्रियस्य चाकामंहतस्य । ते ये शतमिन्द्रंस्यानन्दाः । स एको बृहस्पतें-रानन्दः । श्रोत्रियस्य चाकामंहतस्य । ते ये शतं बृहस्पतें-रानन्दाः । स एकः प्रजापतें-रानन्दः । श्रोत्रियस्य चाकामंहतस्य । ते ये शतं प्रजापतें-रानन्दाः । स एको ब्रह्मणं आनन्दः । श्रोत्रियस्य चाकामंहतस्य । स यश्चांयं पुरुषे । यश्चासांवादित्ये । स एकः । स यं एवंवित् । अस्माल्लोंकात्प्रेत्य । एतमन्नमय-मात्मान-मुपंसंक्रामति । एतं प्राणमय मात्मान-मुपंसंक्रामति । एतं मनोमय-मात्मान-मुपंसंक्रामति । एतं विज्ञानमय-मात्मान-मुपंसंक्रामति । एतमानन्द-मय-मात्मान-मुपंसंक्रामति । तदप्येष श्लोंको भवति ॥ ८ ॥

यतो वाचो निवंर्तन्ते । अप्रांप्य मनंसा सह । आनन्दं ब्रह्मंणो विद्वान् । न बिभेति कुतंश्चनेति । एतगं ह वा वं न तपति । किमहगं साधुं नाकरवम् । किमहं पाप-मकरंव-मिति । स य एवं विद्वा-नेते आत्मांनगं स्पृणुते । उभे ह्येंवैष एते आत्मांनगं स्पृणुते । य एवं वेदं । इत्युंपनिषंत् ॥ ९ ॥

ॐ सह नां-ववतु ............ॐ शान्तिः शान्तिः शान्तिः ॥

## तृतीया भृगुवल्ली

ॐ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्विना-वधीत-मस्तु मा विद्विषावहै ।

ॐ शान्तिः शान्तिः शान्तिः ॥

### ब्रह्मजिज्ञासा

भृगु-र्वै वारुणिः । वरुणं पितर-मुपससार । अधीहि भगवो ब्रह्मेति । तस्मा एतत् प्रोवाच । अन्नं प्राणं चक्षुश्श्रोत्रं मनो वाच-मिति । तग्ं होवाच । यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्मेति । स तपोऽतप्यत । स तप-स्तप्त्वा ॥ १ ॥

### पञ्चकोशान्तःस्थित-ब्रह्मनिरूपणम्

अन्नं ब्रह्मेति व्यजानात् । अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते । अन्नेन जातानि जीवन्ति । अन्नं प्रयन्त्यभिसंविशन्तीति । तद्विज्ञाय । पुन-रेव वरुणं पितर-मुपससार । अधीहि भगवो ब्रह्मेति । तग्ं होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तप-स्तप्त्वा ॥ २ ॥

प्राणो ब्रह्मेति व्यजानात् । प्राणा-द्ध्येव खल्विमानि भूतानि जायन्ते । प्राणेन जातानि जीवन्ति । प्राणं प्रयन्त्यभिसंविशन्तीति । तद्विज्ञाय । पुन-रेव वरुणं पितर-मुपससार । अधीहि भगवो ब्रह्मेति । तग्ं होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तप-स्तप्त्वा ॥ ३ ॥

मनो ब्रह्मेति व्यंजानात् । मनंसो ह्येव खल्विमानि भूतानि जायंन्ते । मनंसा जातानि जीवन्ति । मनः प्रयंन्त्यभिसंविंशन्तीतिं । तद्विज्ञायं । पुनं-रेव वरुंणं पितंर-मुपंससार । अधींहि भगवो ब्रह्मेतिं । तगं होंवाच । तपंसा ब्रह्म विजिंज्ञासस्व । तपो ब्रह्मेतिं । स तपोंऽतप्यत । स तपं-स्तप्त्वा ॥ ४ ॥

विज्ञानं ब्रह्मेति व्यंजानात् । विज्ञाना-द्ध्येव खल्विमानि भूतानि जायंन्ते । विज्ञानेंन जातानि जीवन्ति । विज्ञानं प्रयंन्त्यभि-संविंशन्तीतिं । तद्विज्ञायं । पुनं-रेव वरुंणं पितंर-मुपंससार । अधींहि भगवो ब्रह्मेतिं । तगं होंवाच । तपंसा ब्रह्म विजिंज्ञासस्व । तपो ब्रह्मेतिं । स तपोंऽतप्यत । स तपं-स्तप्त्वा ॥ ५ ॥

आनन्दो ब्रह्मेति व्यंजानात् । आनन्दाद्ध्येव खल्विमानि भूतानि जायंन्ते । आनन्देन जातानि जीवन्ति । आनन्दं प्रयंन्त्यभि-संविंशन्तीतिं । सैषा भाँर्गवी वांरुणी विद्या । परमे व्योंमन् प्रतिंष्ठिता । य एवं वेद प्रतिंतिष्ठति । अन्नंवानन्नादो भंवति । महान् भंवति प्रजयां पशुभिं-र्ब्रह्मवर्चसेनं । महान् कीर्त्या ॥ ६ ॥

### अन्नब्रह्मोपासनम्

अन्नं न निंन्द्यात् । तद्व्रतम् । प्राणो वा अन्नम् । शरींरमन्नादम् । प्राणे शरींरं प्रतिंष्ठितम् । शरींरे प्राणः प्रतिंष्ठितः । तदेत-दन्न-मन्ने प्रतिंष्ठितम् । स य एत-दन्न-मन्ने प्रतिंष्ठितं वेद प्रतिंतिष्ठति । अन्नंवा-नन्नादो भंवति । महान् भंवति प्रजयां पशुभिं-

ब्रह्मवर्चसेनं । महान् कीर्त्या ॥ ७ ॥

अन्नं न परिंचक्षीत । तद्व्रतम् । आपो वा अन्नम् । ज्योतिंरन्नादम् । अप्सु ज्योतिः प्रतिंष्ठितम् । ज्योतिष्यापः प्रतिंष्ठिताः । तदेत-दन्न-मन्ने प्रतिंष्ठितम् । स य एत-दन्न-मन्ने प्रतिंष्ठितं वेद प्रतिंतिष्ठति । अन्नंवा-नन्नादो भंवति । महान् भंवति प्रजयां पशुभिं-र्ब्रह्मवर्चसेनं । महान् कीर्त्या ॥ ८ ॥

अन्नं बहु कुंर्वीत । तद्व्रतम् । पृथिवी वा अन्नम् । आकाशोंऽन्नादः । पृथिव्यामांकाशः प्रतिंष्ठितः । आकाशे पृंथिवी प्रतिंष्ठिता । तदेत-दन्न-मन्ने प्रतिंष्ठितम् । स य एत-दन्न-मन्ने प्रतिंष्ठितं वेद प्रतिंतिष्ठति । अन्नंवा-नन्नादो भंवति । महान् भंवति प्रजयां पशुभिं-र्ब्रह्मवर्चसेनं । महान् कीर्त्या ॥ ९ ॥

## सदाचारप्रदर्शनम् । ब्रह्मानन्दानुभवः

न कंचन वसतौ प्रत्यांचक्षीत । तद्व्रतम् । तस्माद्यया कया च विधया बह्वंन्नं प्राप्नुयात् । अराध्यस्मा अन्नमिंत्याचक्षते । एतद्वै मुखतोंऽन्नगं राद्धम् । मुखतोऽस्मा अंन्नगं राध्यते । एतद्वै मध्यतोंऽन्नगं राद्धम् । मध्यतोऽस्मा अंन्नगं राध्यते । एतद्वा अन्ततोंऽन्नगं राद्धम् । अन्ततोऽस्मा अंन्नगं राध्यते । य एवं वेद । क्षेम इंति वाचि । योगक्षेम इति प्रांणापानयोः । कर्मेति हस्तयोः । गति-रिंति पादयोः । विमुक्ति-रिंति पायौ । इति मानुषीं-स्समाज्ञाः । अथ दैवीः । तृप्ति-रिंति वृष्टौ । बल-मिंति

विद्युति । यश इंति पशुषु । ज्योतिरिति नंक्षत्रेषु । प्रजाति-रमृत-मानन्द इंत्युपस्थे । सर्व-मिंत्याकाशे । तत् प्रतिष्ठेत्युंपासीत । प्रतिष्ठांवान् भवति । तन्मह इत्युंपासीत । मंहान् भवति । तन्मन इत्युंपासीत । मानंवान् भवति । तन्नम इत्युंपासीत । नम्यन्तेंऽस्मै कामाः । तद्ब्रह्मेत्युंपासीत । ब्रह्मंवान् भवति । तद्ब्रह्मणः परिमर इत्युंपासीत । पर्येणं म्रियन्ते द्विषन्तं-स्सपत्नाः । परि येंऽप्रियाँ भ्रातृव्याः । स यश्चांयं पुरुषे । यश्चासां-वादित्ये । स एकंः । स यं एवंवित् । अस्माल्लोंकात् प्रेत्य । एत-मन्नमय-मात्मान-मुपंसंक्रम्य । एतं प्राणमय-मात्मान-मुपंसंक्रम्य । एतं मनोमय-मात्मान-मुपंसंक्रम्य । एतं विज्ञानमय-मात्मान-मुपंसंक्रम्य । एतमानन्दमय-मात्मान-मुपंसंक्रम्य । इमान् लोकान् कामान्नी काम-रूप्यंनुसंचरन् । एतत्साम गांयन्नास्ते । हा ३ वु हा ३ वु हा ३ वुं । अहमन्न-महमन्न-महमन्नम् । अहमन्नादो २ ऽहमन्नादो २ ऽहमन्नादः । अहग् श्लोककृ-दहग् श्लोककृ-दहग् श्लोककृत् । अहमस्मि प्रथमजा ऋता ३ स्य । पूर्वं देवेभ्यो अमृतस्य ना ३ भाइ । योमा ददाति स इदेव मा ३ वाः । अह-मन्नमन्नं-मदन्तमा ३ द्मि । अहं विश्वं भुवंन-मभ्यंभवाम् । सुवर्न ज्योतीः । य एवं वेदं । इत्युंपनिषंत् ॥ १० ॥

ॐ सह नां-ववतु ............ॐ शान्तिः शान्तिः शान्तिंः ॥

# महानारायणोपनिषत्

## चतुर्थः प्रश्नः

ॐ स॒ह नां॑ववतु । स॒ह नौ॑ भुनक्तु । स॒ह वी॒र्यं॑ करवावहै । ते॒ज॒स्वि॒ना॒वधी॑तमस्तु॒ मा वि॑द्वि॒षाव॑हैँ ।

ॐ शान्ति॒: शान्ति॒: शान्ति॑: ॥

### अम्भस्यपारे [1]

अम्भ॑स्य पा॒रे भुव॑नस्य॒ मध्ये॒ नाक॑स्य पृष्ठे म॑ह॒तो मही॑यान् । शु॒क्रेण॒ ज्योती॑ग्ं॑षि समनु॒प्रवि॑ष्टः प्र॒जाप॑तिश्चरति॒ गर्भे॑ अ॒न्तः । यस्मि॑न्नि॒दग्ं सं च॒ विचै॑ति॒ सर्वं॒ यस्मि॑न्दे॒वा अधि॒ विश्वे॑ नि॒षेदुः । तदे॒व भू॒तं तदु॒ भव्य॑मा इ॒दं तद॒क्षरे॑ पर॒मे व्यो॑मन् । येना॑वृ॒तं खं च॒ दिवं॑ म॒ही॑च॒ येना॑दि॒त्यस्तप॑ति॒ तेज॑सा॒ भ्राज॑साच । यम॒न्त-स्स॑मु॒द्रे क॒वयो॒ वय॑न्ति॒ यद॒क्षरे॑ पर॒मे प्र॒जाः । यतः॑ प्रसू॒ता ज॒गतः॑ प्रसू॒ती तोये॑न जी॒वान् व्यच॑सर्ज॒ भूम्या॑म् । यदोष॑धीभिः पु॒रुषा॑न् प॒शूग्श्च॒ विवे॑श भू॒तानि॑ चरा॒च॒राणि॑ । अतः॑ प॒रं नान्य॒दणी॑यसग्ं हि॒ परा॑त्पर॒ं यन्मह॑तो म॒हान्त॑म् । यदे॑क-म॒व्यक्त॒-मन॑न्तरू॒पं विश्वं॑ पु॒रा॒णं तम॑स॒: पर॑स्तात् ॥

तदे॒वर्तं तदु॑ स॒त्यमा॑हु॒-स्तदे॒व ब्रह्म॑ पर॒मं क॑वी॒नाम् । इ॒ष्टा॒पू॒र्तं ब॑हु॒धा जा॒तं जाय॑मानं वि॒श्वं बि॑भर्ति॒ भुव॑नस्य॒ नाभि॑ः । तदे॒वाग्निस्तद्वा॒यु-स्तत्सूर्य॒स्तदु॑ च॒न्द्रमा॑ः । तदे॒व शु॒क्रम॒मृत॒ं तद्ब्रह्म॒

तदाप-स्स प्रजापंतिः । सर्वे-निमेषा जज्ञिरें विद्युतः पुरुंषादधि । कुला मुंहूर्ताः काष्ठाँश्चाहोरात्राश्चं सर्वशः । अर्धमासा मासां ऋतवं-स्संवत्सरश्चं कल्पन्ताम् । स आपंः प्रदुघे उभे इमे अन्तरिंक्ष-मंथो सुवंः । नैनंमूर्ध्वं न तिर्यञ्चं न मध्ये परिंजग्रभत् । न तस्येंशे कश्चन तस्यं नाम महद्यशंः ॥

न संदृशें तिष्ठति रूपं-मस्य न चक्षुंषा पश्यति कश्चनैनम् । हृदा मंनीषा मनंसाभिक्लृप्तो य एंनं विदुरमृतास्ते भंवन्ति । अद्भ्य-स्सम्भूंतो हिरण्यगर्भ इत्यष्टौ । एष हि देवः प्रदिशोऽनुसर्वाः पूर्वोहि जात-स्स उ गर्भे अन्तः । सविजायंमान-स्सजनिष्यमांणः प्रत्यङ्मुखांस्तिष्ठति विश्वतोंमुखः । विश्वतंश्चक्षुरुत विश्वतोंमुखो विश्वतों हस्त उत विश्वतंस्पात् । सं बाहुभ्यां नमंति संपतंत्रै-र्द्यावांपृथिवी जनयंन् देव एकंः । वेन-स्तत्पश्य-न्विश्वा भुवंनानि विद्वान् यत्र विश्वं भवत्येकंनीळम् । यस्मिंन्निदगं सं च विचैकगं स ओतः प्रोतंश्च विभुः प्रजासुं । प्रतद्वोंचे अमृतं नु विद्वान् गंन्धर्वो नाम निहिंतं गुहांसु ॥

त्रीणिं पदा निहिंता गुहांसु यस्तद्वेदं सवितुः पितासंत् । स नो बन्धुं-र्जनिता स विंधाता धामांनि वेद भुवंनानि विश्वां । यत्रं देवा अमृतंमानशाना-स्तृतीये धामांन्यभ्यैरंयन्त । परिद्यावांपृथिवी यंन्ति सद्यः परिं लोकान् परि दिशः परि सुवंः । ऋतस्य तन्तुं

वितत्तं विचृत्य तदपश्यत्तदभवत् प्रजासु । परीत्य लोकान् परीत्य भूतानि परीत्य सर्वाः प्रदिशो दिशश्च । प्रजापतिः प्रथमजा ऋतस्यात्मनाऽऽत्मानमभि-संबभूव । सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् । सनिं मेधामयासिषम् । उद्दीप्यस्व जातवेदो ऽपघ्नन्निर्ऋतिं मम ॥

पशूग्श्च मह्यमावह जीवनं च दिशोदिश । मानो हिग्ंसीज्जातवेदो गामश्वं पुरुषं जगत् । अबिभ्रदग्न आगहि श्रिया मा परिपातय ॥

## गायत्रीमन्त्राः

पुरुषस्य विद्म सहस्राक्षस्य महादेवस्य धीमहि । तन्नो रुद्रः प्रचोदयात् । तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् । तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि । तन्नो दन्तिः प्रचोदयात् । तत्पुरुषाय विद्महे चक्रतुण्डाय धीमहि । तन्नो नन्दिः प्रचोदयात् । तत्पुरुषाय विद्महे महासेनाय धीमहि । तन्नष्षण्मुखः प्रचोदयात् । तत्पुरुषाय विद्महे सुवर्णपक्षाय धीमहि । तन्नो गरुडः प्रचोदयात् । वेदात्मनाय विद्महे हिरण्यगर्भाय धीमहि । तन्नो ब्रह्म प्रचोदयात् । नारायणाय विद्महे वासुदेवाय धीमहि । तन्नो विष्णुः प्रचोदयात् । वज्रनखाय विद्महे तीक्ष्णदग्ंष्ट्राय धीमहि । तन्नो नारसिग्ंहः प्रचोदयात् ॥

भास्करायं विद्महें महद्युतिकरायं धीमहि । तन्नों आदित्यः प्रचोदयांत् । वैश्वानरायं विद्महें लालीलायं धीमहि । तन्नों अग्निः प्रचोदयांत् । कात्यायनायं विद्महें कन्यकुमारिं धीमहि । तन्नों दुर्गिः प्रचोदयांत् ॥

## दूर्वासूक्तम्

सहस्रपरंमा देवी शतमूंला शताङ्कुंरा । सर्वगं हरतु मे पापं दूर्वा दुंस्स्वप्ननाशंनी । काण्डांत्काण्डात् प्ररोहंन्ती परुंषः परुषः परिं ।

एवानों दूर्वे प्रतंनु सहस्रेंण शतेनं च । या शतेनं प्रतनोषिं सहस्रेंण विरोहंसि । तस्यांस्ते देवीष्टके विधेमं हविषां वयम् । अश्वंक्रान्ते रंथक्रान्ते विष्णुक्रांन्ते वसुन्धंरा । शिरसां धारंयिष्यामि रक्षस्व मां पदेपदे ॥

## मृत्तिकासूक्तम्

भूमि-र्धेनुर्धरणी लोंकधारिणी । उद्धृतांऽसि वंराहेण कृष्णेन शंत-बाहुना । मृत्तिकें हनं मे पापं यन्मया दुंष्कृतं कृतम् । मृत्तिकें ब्रह्मंदत्ताऽसि काश्यपेंनाभिमन्त्रिंता । मृत्तिकें देहिं मे पुष्टिं त्वयि संर्वं प्रतिष्ठिंतम् ॥

मृत्तिकें प्रतिष्ठिंते सर्वं तन्मे निंर्णुद मृत्तिंके । तयां हतेनं पापेन गच्छामि पंरमां गतिम् ॥

## शत्रुजयमन्त्राः

यतं इन्द्र भयांमहे ततों नो अभंयं कृधि । मघंवञ्छग्धि तव तन्नं ऊतये विद्विषो विमृधों जहि । स्वस्तिदा विशस्पतिं-र्वृत्रहा विमृधोंवशी । वृषेन्द्रंः पुर एंतु न-स्स्वस्तिदा अंभयङ्करः । स्वस्ति न इन्द्रों वृद्धश्रंवा-स्स्वस्ति नंः पूषा विश्ववेंदाः । स्वस्ति नस्तार्क्ष्यो अरिंष्टनेमि-स्स्वस्ति नो बृहस्पतिं-र्दधातु । आपान्तमन्यु-स्तृपलंप्रभर्मा धुनि-श्शिमींवा-ञ्छरुंमाग्ं ऋजीषी । सोमो विश्वान्यतसावनांनि नार्वागिन्द्रं प्रतिमानांनिदेभुः ॥

ब्रह्मंजज्ञानं प्रंथमं पुरस्ता-द्विसींमत-स्सुरुचों वेन आंवः । सबुध्नियां उपमा अंस्य विष्ठा-स्सतश्च योनि-मसंतश्च विवंः । स्योना पृंथिवि भवां नृक्षरा निवेशंनी । यच्छां नश्शर्म सप्रथाः । गन्धद्वारां दुंराधर्षां नित्यपुंष्टां करीषिणींम् । ईश्वरीग्ं सर्व-भूतानां तामिहोपंह्वये श्रियम् । श्रीर्मे भजतु । अलक्ष्मीर्मे नश्यतु । विष्णु-मुखा वै देवाश्छन्दोंभिरिमाल्लोका-नंनपजय्य-मभ्यंजयन् । महाग् इन्द्रो वज्रंबाहुष्षोडशी शर्म यच्छतु ॥

स्वस्ति नों मघवां करोतु हन्तुं पाप्मानं योंऽस्मान्द्वेष्टिं । सोमानग्ं स्वरंणं कृणुहि ब्रंह्मणस्पते । कक्षीवंन्तं य औंशिजम् । शरींरं यज्ञशमलं कुसींदं तस्मिन्थ्सीदतु योंऽस्मान्द्वेष्टिं । चरंणं पवित्रं वितंतं पुराणं येनं पूत स्तरंति दुष्कृतानिं । तेनं पवित्रेंण

शुद्धेनं पूता अतिं पाप्मान-मरांतिं तरेम । सजोषां इन्द्र सगंणो मरुद्भिस्सोमं पिब वृत्रहञ्छूर विद्वान् । जहि शत्रूगं रप मृधों नुदस्वाथाभंयं कृणुहि विश्वतोंनः । सुमित्रान आप ओषंधय-स्सन्तु दुर्मित्रास्तस्मैं भूयासु-र्यो॑स्मान् द्वेष्टि यं चं वयं द्विष्मः । आपोहिष्ठा मंयोभुवस्तानं ऊर्जे दंधातन ॥

महेरणांय चक्षंसे । योवं-श्शिवतंमो रस-स्तस्यं भाजयते हनंः । उशती-रिंव मातरंः । तस्मा अरंगमामवो यस्यक्षयांय जिन्वंथ । आपों जनयंथा च नः ॥

## अघमर्षणसूक्तम्

हिरंण्यशृङ्गं वरुंणं प्रपंद्ये तीर्थं में देहि याचिंतः । यन्मयां भुक्त-मसाधूंनां पापेभ्यंश्च प्रतिग्रंहः । यन्मे मनंसा वाचा कर्मणा वा दुंष्कृतं कृतम् । तन्न इन्द्रो वरुंणो बृहस्पतिं-स्सविता चं पुनन्तु पुनंः पुनः । नमोऽग्नयें॑ऽप्सुमते नम इन्द्रांय नमो वरुंणाय नमो वारुण्यैं नमोऽद्भ्यः ॥

यदपां क्रूरं यदंमेध्यं यदंशान्तं तदपंगच्छतात् । अत्याशना-दंतीपाना-द्यच्च उग्रात् प्रंतिग्रहांत् । तन्नो वरुंणो राजा पाणिनांह्यवमर्शंतु । सोंऽहमंपापो विरजो निर्मुक्तो मुंक्तकिल्बिषः । नाकंस्य पृष्ठ-मारुंह्य गच्छेद्ब्रह्मंसलोकताम् । यश्चाप्सु वरुंणस्स पुनात्वंघमर्षणः । इमं में गङ्गे यमुने सरस्वति शुतुंद्रि-स्तोमगं

